## अथ समारोपसूत्रम् ।

**समारोपयेदयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत्पाणी वा या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति यदि पाण्योररणी संस्पृश्य मन्थयेत्प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथा भव यजमानाय शं योरिति ॥ १ ॥**

इति समारोपसूत्रम् ।

---

## सवृत्तिसमारोपविधिसूत्रभाष्यम् ।

**समारोपयेदयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत् ॥ १ ॥**

**दे० भाष्यम्**—इदानीं समारोपणविधानं वक्ष्यते । अयं ते योनिर्ऋत्विय इत्येतयर्चा । अरणी उत्तरारण्यधरारणी च । गार्हपत्येऽग्नौ प्रतितपेदध्वर्युर्यजमानो वा । एतेनैव मन्त्रेण दक्षिणाग्नौ समारोपयेत् । गार्हपत्यग्रहणं गार्हपत्याद्यनुक्रमेषु सर्वेषु समारोपयेद्विकृतावपि सर्वेषु समारोपणं दर्शयति । अग्नीनस्य समारोप्येति पृथगरणीष्वग्नीन्समारोप्येत्यन्येषाम् । सर्वेष्वग्निषु द्वाभ्यामेवारणीभ्यां समारोपणमन्येषाम् । अस्माकं त्वन्वाहितेष्वजस्रेषु च न ॥ १ ॥

**वृत्तिः**—पूर्वे एव द्वे अरणी गार्हपत्ये प्रतितपेन्नाग्न्यन्तरे । यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरे तेनैव मन्त्रेण समारोपणं भवति ॥ १ ॥

**पाणी वा या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति ॥ २ ॥**

**दे० भा०**—पाणी वा गार्हपत्ये प्रतितपेद्यजमानः । 'या ते अग्ने' इत्यनेन मन्त्रेण । पाणी प्रतितपेदरणी वेति विकल्पः । यजमान एव प्रतितपेन्मन्त्रलिङ्गादात्माऽऽत्मानमच्छेति ॥ २ ॥

**वृत्तिः**—द्वौ पाणी गार्हपत्ये सकृदेव प्रतितपेत् । द्वयोरपि समारोपणं यजमान एव कुर्यात् । पूर्वमन्त्रस्य प्रजगाशीष्ट्वात् । उत्तरस्य चाऽऽत्मानमितिलिङ्गात् । कर्त्रन्तरविधानाभावाच्च ॥ २ ॥

**यदि पाण्योररणी संस्पृश्य मन्थयेत्प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो**

हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शं योः ॥ ३ ॥

इति समारोपविधिसूत्रम् ।

दे० भा०—यदि पाण्योररण्योः समारोप्यः पाण्योर्वेत्युक्तम् । तत्र यदि पाण्योः समारोपणं कृतं भवति ततो मन्थनकालेऽरणी पाणिभ्यां संस्पृश्य मन्थयेत् । ' प्रत्यवरोह ' इत्यनेन मन्त्रेण स्पृशेत् ॥ ३ ॥

इति समारोपविधिसूत्रभाष्यम् ।

वृत्तिः—अरण्योर्हस्तयोर्वा समारोपणमुक्तम् । तत्रावरोहणकाले यजमानः ' प्रत्यवरोह जातवेदः ' इत्येतं मन्त्रमुक्त्वा मन्त्रान्ते तयोररण्योरग्निं मन्थयेत्स्वयं वा मन्थेत् । एवमरणी समारोपणे । यदि हस्तयोः समारोपणं स्यात्तदैतेन मन्त्रेणारणी संस्पृश्य मन्थयेत् । यजमानो मन्थनकाले यावदग्नेर्जन्म तावदरणी संस्पृशन्नेवाऽऽस्ते । मथ्यमानेऽग्नौ यद्युत्पादनसमर्थः प्रयत्नो निष्फलः स्यात्तदा पुनरारम्भावसरे मन्त्र आवर्तयितव्यः । एवं व्यर्थे व्यर्थे पुनः पुनरावर्तयेत् । अग्न्यवरोहार्थमरणी मन्थयेदित्येकोऽर्थः । यदि पाण्योः समालोपणं तदैवमवरोहयेत्पाणिभ्यामरणी अनेन मन्त्रेण संस्पृश्य मन्थयेदित्यपरोऽर्थः ॥ ३ ॥

इति समारोपविधिसूत्रवृत्तिः ।

---

## अथ समारोपप्रयोगः ।

प्रातरग्निहोत्रहोमानन्तरं सगृहः प्रवत्स्यंश्चेदाहिताग्निराचम्य

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थमापन्निमित्तमग्निं समारोपयिष्ये ।**

इति संकल्प्यारणी गृहीत्वा

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।**
**तं जानन्नग्न आसीदाथानो वर्धया गिरः ॥ ( ऋ० सं० ३–१–३३ )**

इति गार्हपत्ये प्रतितप्य यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरेऽनेनैव मन्त्रेण दक्षिणाग्नावरणी प्रतितपेत् ।

अथवा द्वौ पाणी गार्हपत्ये प्रतितपेत् । तत्र मन्त्रः—

**या ते अग्ने यज्ञिया तनूस्तयेह्यारोहाऽऽत्माऽऽत्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमानः ।**

**आचम्यानेन समारोपविधिना श्रीपरमेश्वरः प्रीयताम् ।**

इति समारोपप्रयोगः ।

---

## अथावरोहणप्रयोगः ।

समारोप्य ग्निं वाते वासेऽग्निं मन्थेत् । तत्र मन्त्र —

**प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शंयोः ॥ इति ।**

अथवा पाणिभ्यामरणी प्रत्यवरोहेत्यनेन मन्त्रेण संस्पृश्य मन्थेदिति । यावदग्न्युत्पादनं मन्त्रावृत्तिः ।

इत्यवरोहणप्रयोगः ।

---

## *प्रथमाग्निहोत्रारम्भः ।

**अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति ।( आपस्तम्ब० श्रौ० सू० ५ । २२ । १० )**

तदिदमध्वर्यूणामुक्तमाश्वलायनादिभिरपि कर्तव्यमेवातस्तत्प्रयोगं प्रयुञ्ज्महि ।

आधानानन्तरं द्वादशदिनमध्ये पूर्णमाससोमारम्भ प्रसक्तौ द्वादशदिनपर्यन्तमजस्रेष्वेव तत्कार्यम् । तत्रोद्धरणकालेऽग्न्युत्पत्तिक्रमेण प्रादुष्करणं कार्यम् । कालातिक्रमे सर्वप्रायश्चित्तं कार्यम् । त्रयोदशेऽहनि प्रातर्होमान्तेऽग्नित्यागः । ततः सायंकालप्रभृति होमार्थमुद्धरणं कार्यम् । द्वादशदिनमध्ये पौर्णमाससोमारम्भप्रसक्तौ पवमानेष्ट्यन्तेऽग्नीन्परित्यज्यानन्तरं सायं होमार्थमुद्धरणं कार्यम् । तत्राग्निहोत्रमारप्स्यमानोऽपराह्णे यज्ञोपवीती पत्न्या सहाऽऽचम्य तीर्थेन प्रविश्य जघनेन गार्हपत्यं कुशपाणिः—

**ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थमग्निहोत्रमारप्स्ये । यावज्जीवमग्निहोत्रं होष्यामि । जीर्णो विरंस्ये ।**

**इति संकल्प्याध्वर्युं वृणुयात् ।**

**अग्निहोत्रहोमेऽध्वर्यो त्वामहं वृणे ।**

**अग्निहोत्रमारप्स्यमानो दशहोतारं होष्यामि ।**

**ततोऽध्वर्युराज्यं संस्कृत्य जुह्वां चतुर्गृहीतं गृहीत्वा**

**चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः ।**

**वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । आऽस्मासु नृम्णं धात्स्वाहा ।**

---

* अयं प्रयोग आपदेवसूनुनाऽनन्तदेवेन कृतस्तथैव संगृहीतोऽस्ति ।